दृष्ट्वेति । श्वासेनान्तः प्रविष्टो विष्टपौघं चतुर्दशभुवनात्मकं जगद् दृष्टवान् । पुनश्च बहिरनुपतितः त्वयि पिहिततनौ अन्तर्हिते सति स्वाश्रमे पुष्पभद्रातीरे प्राग्वद् यथास्थानं स्थितश्चासीत् । अत्र च मायायाः स्वरूपतः प्रदर्शनस्याशक्यत्वाद् भगवता कार्यमुखेन दर्शितेति द्रष्टव्यम् ॥ ८ ॥

अथ विष्णुभक्त्या सन्तुष्टस्य शिवस्यानुग्रहप्रकारमाह —

**गौर्या सार्धं तदग्रे पुरभिदथ गतस्त्वत्प्रियप्रेक्षणार्थी**
**सिद्धानेवास्य दत्त्वा स्वयमयमजरामृत्युतादीन् गतोऽभूत् ।**
**एवं त्वत्सेवयैव स्मररिपुरपि स प्रीयते येन तस्मा-**
**न्मूर्तित्रय्यात्मकस्त्वं ननु सकलनियन्तेति सुव्यक्तमासीत् ॥ ९ ॥**

गौर्येति । तस्य मार्कण्डेयस्य अग्रे पुरतः । अस्य स्वयं सिद्धान् स्व-तपःप्रभावेणैव प्राप्तान् अजरामृत्युतादीन्, आदिशब्देन विष्णुभक्तियशोज्ञान-विज्ञानपुराणाचार्यतादीन् वरान् दत्त्वा अयं शिवः गतोऽभूत् । अनेन च विष्णोः सर्वेश्वरत्वं सिद्धमित्याह — एवमिति । त्वं विष्णुः सकलनियन्ता सर्वेश्वर इति सुव्यक्तं निश्चितमासीत् । अत्र हेतुः — मूर्तित्रय्यात्मकस्त्वं नन्विति । मूर्तित्रयी ब्रह्मविष्णुगिरीशाः तदात्मकः तत्स्वरूपः । अत्र हेतुः — त्वत्सेवयेति । स स्मररिपुरपि त्वत्सेवयैव प्रीयते येन तस्माद् विष्णोरेव कार्य-निमित्तमवस्थाभेदो मूर्तित्रयमित्यभिप्रायः ॥ ९ ॥

ननु शिवस्यावस्थाभेद इति किं न स्यादित्याशङ्क्य स्थानभेदेन विष्णोस्तेभ्यो व्यति-रेक ऐक्येऽपि सम्भवतीत्याह—

**त्र्यंशेऽस्मिन् सत्यलोके विधिहरिपुरभिन्मन्दिराण्यूर्ध्वमूर्ध्वं**
**तेभ्योऽप्यूर्ध्वं तु मायाविकृतिविरहितो भाति वैकुण्ठलोकः ।**
**तत्र त्वं कारणाम्भस्यपि पशुपकुले शुद्धसत्त्वैकरूपी**
**सच्चिद्ब्रह्माद्वयात्मा पवनपुरपते! पाहि मां सर्वरोगात् ॥ १० ॥**

त्र्यंश इति । त्रयो ब्रह्मविष्णुशिवलोकरूपा अंशा लोकाः यस्मिन् स त्र्यंशः, तस्मिन् सत्यलोके ऊर्ध्वमूर्ध्वमिति प्रथमं ब्रह्मलोके विधिमन्दिरं, तदु-परि विष्णुलोके विष्णुमन्दिरं, तदुपरि शिवलोके शिवमन्दिरमिति । तत्रस्थाः

---

१. 'परभिल्लोके पुरभित्पुरमि' क. ग. पाठः.

सृष्टिस्थितिसंहारकर्तारस्त्रिमूर्तयः । तेभ्योऽप्यूर्ध्वं तु ब्रह्माण्डाद् बहिः । अत एव मायाविकृतयः महदहङ्कारादयः षोडशविकाराः, तैर्विरहितः शुद्धसत्त्वगुणमयो वैकुण्ठलोको भाति । तत्र वैकुण्ठलोके कारणाम्भसि आवरणोदके पशुपकुले नन्दगेहेऽपि त्वं शुद्धसत्त्वैकरूपी तत्स्वच्छतयावरणाभावात् सच्चिद्ब्रह्माद्वयात्मा सच्चिदानन्दाद्वयब्रह्मवपुरेव त्वम् । अतः सर्वरोगान्मां पाहि मोचयेति ॥ १० ॥

इत्युत्तमभक्तिप्रार्थनावर्णनं मार्कण्डेयस्य प्रलयप्रदर्शनवर्णनं, परमेश्वरप्रसादवर्णनं च
सप्तनवतितमं दशकम् ॥

---

एवं स्तुत्यस्य विष्णोर्निष्कलत्वं प्रसाध्य तद्रूपेण स्तौति —

**यस्मिन्नेतद् विभातं यत इदमभवद् येन चेदं य एतद्**
**योऽस्मादुत्तीर्णरूपः खलु सकलमिदं भासितं यस्य भासा ।**
**यो वाचां दूरदूरे पुनरपि मनसां यस्य देवा मुनीन्द्रा**
**नो विद्युस्तत्त्वरूपं किमु पुनरपरे कृष्ण! तस्मै नमस्ते ॥ १ ॥**

यस्मिन्निति । हे कृष्ण! तस्मै सच्चिदानन्दस्वरूपाय ते नमः । ननु स्तूयतां, किं नमस्कारमात्रेणेत्यत्राह — यस्येति । देवा मुनीन्द्रा अपि यस्य तत्त्वरूपं, तदिति सर्वनाम, सर्वं च ब्रह्म, तस्य भावस्तत्त्वं ब्रह्मत्वं, तद्रूपं न विदुः । के पुनरत्र वयं ज्ञातुं स्तोतुं वेति भावः । दुर्ज्ञेयत्वमेवाह — यो वाचामिति । लौकिकानां वैदिकानामपि वचसां दूरदूरे, वाच्यवाचकसम्बन्धाभावात् । पुनर्मनसामपि दूरदूरे । अत्र हेतुः — यस्य भासा चिच्छक्त्या सकलमिदं जगद् भासितं प्रकाशितम् । यत्प्रकाशेन लब्धसत्ताकं मनआदि, तेन तत्प्रकाशनमशक्यमित्यर्थः । तर्हि ज्ञातुमशक्यत्वादसदेवेदमित्यत्राह — यस्मिन्निति । यस्मिन्नधिष्ठाने एतद् जगद् विभातं तिष्ठति । यतो निमित्तोपादानकारणभूतादिदं जगदभवत् । येन इदं जगद्, चकारादैक्यं याति लीयत इत्यर्थः । अतो जगत्कारणत्वाद् एतद् जगद् यः यद्रूपः ईश्वर एव जगदात्मना भाति । अतो जगदात्मना प्रतीतस्य सिद्धौ न प्रमाणान्तरापेक्षेति भावः । नन्वीश्वरस्य जगदात्मत्वे विकारित्वप्रसङ्ग इति चेद्, नेत्याह —

योऽस्मादिति । अस्माद् आत्मन्यविद्याकल्पिताज्जगतः उत्तीर्णं व्यतिरिक्तं रूपं यस्य ॥ १ ॥

एवमीश्वरस्य जगत्कारणत्वमुपपाद्य अनन्तरं जगदनुग्राहकत्वमाह —

जन्माथो कर्म नाम स्फुटमिह गुणदोषादिकं वा न यस्मिन्
लोकानामूतये यः स्वयमनुभजते तानि मायानुसारी ।
बिभ्रच्छक्तीररूपोऽपि च बहुतररूपोऽवभात्यद्भुतात्मा
तस्मै कैवल्यधाम्ने पररसपरिपूर्णाय विष्णो! नमस्ते! ॥ २ ॥

जन्मेति । जन्म श्रीकृष्णाद्यवतारः अथो अनन्तरं कर्म कंसहननादि नाम जन्मकर्मनिमित्तम् । गुणदोषाः निग्रहानुग्रहादयः । आदिशब्देन पुत्रमित्रादयः । एतानि यस्मिन् स्फुटं परमार्थतो न सन्ति, तथापि लोकानामूतये जगदनुग्रहाय मायानुसारी तानि जन्मकर्मादीनि स्वयम् अनन्याधीनस्वभावः सन् अनुभजते अङ्गीकरोति अपिच शक्तीः विद्याविद्याज्ञानैश्वर्यादिलक्षणाः बिभ्रत् स्वयमरूपो निर्गुणोऽपि स्थावरजङ्गमभेदेन सुरनरतिर्यगादिभेदेन च बहुतररूपश्चावभाति, अतोऽद्भुतात्मा आश्चर्यस्वरूपः, तस्मै जगदनुग्राहकाय पररसेन परमानन्देन परिपूर्णाय अत एव कैवल्यधाम्ने मोक्षप्रदाय ॥ २ ॥

ननु बहुतररूपत्वे कथमरूपत्वमित्याशङ्क्य तत्स्वरूपस्य सर्वद्वैतनिषेधावधित्वेनोपपादयति —

नो तिर्यञ्चं न मर्त्यं न च सुरमसुरं न स्त्रियं नो पुमांसं
न द्रव्यं कर्म जातिं गुणमपि सदसद् वापि ते रूपमाहुः ।
शिष्टं यत् स्यान्निषेधे सति निगमशतैर्लक्षणावृत्तितस्तत्
कृच्छ्रेणावेद्यमानं परमसुखमयं भाति तस्मै नमस्ते ॥ ३ ॥

नो तिर्यञ्चमिति । ते तवेश्वरस्य रूपं परब्रह्म नो तिर्यञ्चं न पशुपक्ष्यादिकमाहुः आगमास्तद्विदो वा । न मर्त्यं मनुजं सुरं देवम् असुरं न स्त्रियमिति । स्त्रीपुन्नपुंसकभेदेन त्रिप्रकारं शरीरमुच्यते । द्रव्यं विषयान् । कर्म कर्मेन्द्रियाणि । जातिं ब्राह्मणत्वादि । गुणं ज्ञानेन्द्रियाणि । सद् अन्तःकरणम् । असद् अव्यक्तम् । देवादीनां परिच्छिन्नत्वेन देहादीनां जडत्वेन चैतानि न ते स्वरूपमाहुः, किन्तु निगमैर्निषेधे सति यदवशिष्टम् अवधिभूतं स्यात् ।

अत एव निगमशतैः उपनिषद्भिः कृच्छ्रेण वाच्यवाचकसम्बन्धं विना लक्षणावृत्तित आवेद्यमानं प्रतिपाद्यमानं परमसुखमयं परमानन्दरूपं भाति च । अत्र निषेधवाक्यस्य मुख्यार्थस्य निषेधे बाधितत्वात् तदवधिभूतेऽर्थे या वृत्तिः, सा लक्षणावृत्तिः । तथा प्रतिपाद्यमानं सद् अहं ब्रह्मास्मीति निष्कर्मतया त्वत्स्वरूपभूतं परं ब्रह्म प्रकाशत इत्यर्थः ॥ ३ ॥

अथ निषेधविशेषस्याशेषप्रपञ्चसाक्षित्वेन प्रतिपादयति —

मायायां बिम्बितस्त्वं सृजसि महदहङ्कारतन्मात्रभेदै-
र्भूतग्रामेन्द्रियाद्यैरपि सकलजगत् स्वप्नसङ्कल्पकल्पम् ।
भूयः संहृत्य सर्वं कमठ इव पदान्यात्मना कालशक्त्या
गम्भीरे जायमाने तमसि वितिमिरो भासि तस्मै नमस्ते ॥ ४ ॥

मायायामिति । स्वस्मात् पृथगवस्थितायां मायायां चिच्छक्त्या प्रतिबिम्बितस्त्वं महत्तत्त्वेन अहङ्कारभेदैः राजसतामससात्त्विकैः शब्दस्पर्शरूपरसगन्धा इति पञ्चतन्मात्रभेदैः भूतादिभिः एकादशेन्द्रियैः आदिशब्देन प्राणादिभिरपि सकलं जगत् सृजसि । स्वप्नसङ्कल्पकल्पमिति आगमापायित्वात् स्वप्नसङ्कल्पवदयं जाग्रत्प्रपञ्चो मिथ्येत्यर्थः । भूयः पुनश्च यथा कूर्मश्चिरं विहृत्य भूयः स्वपदानि स्वस्मिन् संहृत्य तूष्णीं भवति, एवं कालशक्त्या सर्वं संहृत्य आत्मना स्वस्वरूपेणैव भासि । एवञ्चादावन्ते चासत्त्वात् प्रपञ्चस्य मध्येऽपि मिथ्यात्वमुक्तम् । ईश्वरस्यादिमध्यान्तेषु प्रपञ्चप्रकाशकत्वेन सत्त्वात् साक्षित्वं नित्यत्वं चोक्तम् । ननु सर्वविनाशे ईश्वरस्यापि नाशः इति किं न स्यादित्यत्राह — गम्भीर इति । गम्भीरे अप्रतर्क्ये तमसि सुषुप्तौ जायमान इति । अयमभिप्रायः — सर्वसंहारे सुषुप्तौ सति सकलजगन्निदानभूतमज्ञानं तमश्शब्दवाच्यं न लयं गच्छति, अन्यथा जगतः पुनरुत्पत्त्यभावात्, सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्य परामर्शानुपपत्तेश्चेति । एवञ्च तदापि वितिमिरः नित्योदितानस्तमितप्रकाशरूपतयाज्ञानसाक्षित्वेन भासि । द्रष्टृभावे दृश्यासिद्धेरित्यभिप्रायः । य एवम्भूतः, तस्मै नमस्ते ॥ ४ ॥

---

१. 'थवा', २. 'ध्यावसानेषु' क. ग. पाठः. ३. 'शः किं', ४. 'यं याति' ख. पाठः.

नन्वीश्वरस्य जगत्कारणत्वमसिद्धं वादिविप्रतिपत्तेरित्याशङ्कायां संज्ञाभेद एव विप्रतिपत्तिः न संज्ञिनीत्याह—

शब्दब्रह्मेति कर्मेत्यणुरिति भगवन्! काल इत्यालपन्ति
त्वामेकं विश्वहेतुं सकलमयतया सर्वथा कल्प्यमानम्।
वेदान्तैर्यत् तु गीतं पुरुषपरचिदात्माभिधं तत् तु तत्त्वं
प्रेक्षामात्रेण मूलप्रकृतिविकृतिकृत् कृष्ण! तस्मै नमस्ते॥ ५॥

शब्दब्रह्मेति[1]। त्वामेकमेव शब्दब्रह्मेत्यादिभिः शब्दैः विश्वहेतुं जगत्कारणमालपन्ति वादिनः। शब्दब्रह्म जगत्कारणमिति केचिदालपन्ति, के-चित्[2] कर्म जीवादृष्टमिति, अन्ये परमाणुरिति, अपरे काल इति। एषां शब्दानां त्वमेक एवाभिधेय इति भावः। अत्र हेतुः—सकलमयतया तव सर्वात्मकत्वेन। सर्वथा तत्तद्दर्शनानुसारेण शब्दब्रह्मादिरूपेण तवैव कल्प्यमानत्वादित्यर्थः। सिद्धान्तमाह—वेदान्तैरिति। वेदान्तैस्तु यत् पुरुषपरचिदात्माभिधं तत्त्वं, तत्तु प्रेक्षामात्रेण मूलप्रकृतिविकृतिकृद् गीतमित्यन्वयः। अत्र पुरुषः 'मायायां बिम्बितस्त्वम्' (श्लो० ४) इति प्रागुक्तः, परः मायासम्बन्धरहितः, चिदिति शुद्धचैतन्यम्, आत्मा सर्वानुगतः। पुरुषादिशब्दा अभिधा यस्य तत् तथा। तत्तु तदेव तत्त्वं परं ब्रह्म प्रेक्षामात्रेण मायाप्रेरणमात्रेण मूलप्रकृतिर्माया, तस्या विकृतिः कार्यं जगत्, तत् करोतीति तथा। ननु प्रकृतेः कार्यं कथं ब्रह्म करोतीति[4]। उच्यते। यथा राजा प्रेक्षणमात्रेण सन्निधिं प्राप्तया प्रतीहार्या कर्म करोति, तद्वत् स्वसमवेतक्रियाफलशालित्वलक्षणमुख्यकर्तृत्वं विना प्रकृतिमुखेनेश्वरस्य जगत्कर्तृत्वमिति भावः। हे कृष्ण! य एवं, तस्मै ते नमोऽस्तु॥ ५॥

ननु केयं मूलप्रकृतिरित्याशङ्क्य सदसत्त्वाभ्यामनिर्वचनीया विद्याविद्यात्मिकेश्वरस्य शक्तिरित्याह—

सत्त्वेनासत्तया वा न च खलु सदसत्त्वेन निर्वाच्यरूपा
धत्ते यासावविद्या गुणफणिमतिवद् विश्वदृश्यावभासम्।
विद्यात्वं सैव याता श्रुतिवचनलवैर्यत्कृपास्यन्दलाभे
संसारारण्यसद्यस्त्रुटनपरशुतामेति तस्मै नमस्ते॥ ६॥

सत्त्वेनेति। यस्येयमविद्या तज्ज्ञाने सति निवर्तते। अतः सतीति

१. 'ति। एके वादिनस्त्वां शब्दब्रह्म', २. 'त्यल', ३. 'त् जी', ४. '[illegible]च्यते। सन्मात्र एव।' ख पाठः. ५. 'रश' क. ग. पाठः.

वक्तुमशक्या, सत्तास्फूर्त्यनुपपत्तेः । नासती च, एकैव सती असती चेति नितरामनुपपन्ना विरोधात् । अतोऽविद्या सत्त्वेनासत्तया सदसत्त्वेन वा न निर्वाच्यरूपा निष्कृष्य वक्तुमशक्यं स्वरूपं यस्याः सा तथा । तर्हि नास्तीति चेद्, नेत्याह — असाविति । 'अहमज्ञ' इति सर्वानुभवसिद्धतया तदनवकल्पनमशक्यमिति भावः । यासावविद्या गुणफणिमतिवद् रज्जुसर्पभ्रान्तिवद् विश्वदृश्यस्य सकलजगतः अवभासं जीवस्य संसारदुःखनिवासभूतं शरीराद्यहम्ममाभिमानादिरूपं धत्ते करोतीत्यर्थः । यस्येश्वरस्य कृपायाः स्यन्दः प्रवाहः, तस्य लाभे सति सैव अविद्या श्रुतिवचनलवैः वेदान्तवाक्यलेशैः, श्रवणमात्रेणेत्यर्थः, विद्यात्वं याता विद्यारूपिणी भूत्वा संसाररूपस्यारण्यस्य वनस्यातिनिशिततया सद्यः शीघ्रं त्रुटने खण्डने परशुतामेति, तस्मै नमस्ते ॥ ६ ॥

एवं प्रकृत्यधिष्ठितस्य ब्रह्मणो जगत्कारणत्वमुक्तम् । अथ तदनन्यत्वेन जगदात्मत्वमुच्यते —[1]

**भूषासु स्वर्णवद् वा जगति घटशरावादिके मृत्तिकावत्**
**तत्त्वे सञ्चिन्त्यमाने स्फुरति तदधुनाप्यद्वितीयं वपुस्ते ।**
**स्वप्नद्रष्टुः प्रबोधे तिमिरलयविधौ जीर्णरज्जोश्च यद्वद्**
**विद्यालाभे तथैव स्फुटमपि विकसेत् कृष्ण! तस्मै नमस्ते॥ ७ ॥**

भूषास्विति । ते तद् जगत्कारणभूतम् अद्वितीयं परब्रह्माख्यं वपुः स्वरूपम् (अधुना) अद्यापि जगतः स्थितिकालेऽपि जगति जगद्विषये स्फुरति[2] । नन्विदं ब्रह्मेति कस्यापि नानुभव इत्यत्राह — तत्त्व इति । तत्त्वे परमार्थे सञ्चिन्त्यमाने विचार्यमाणे । ब्रह्म उपादानं, जगत् तत्कार्यं, कार्यकारणयोरनन्यत्वं च शास्त्रे स्थितम् इत्यनुसन्दधतो ब्रह्मैवेदं सर्वमिति स्फुरणं सम्भवत्येवेति भावः । अत्र दृष्टान्तमाह — भूषास्विति । कटककुण्डलादिषु यथा स्वर्णं स्फुरति, यथा वा घटशरावादिके मृत्तिका, स्वर्णादिभिः[3] क्रियमाणेषु कार्येषु कटकादिषु स्वर्णमेवेदमित्यनुभवरूपा प्रतीतिरुदेति, तद्वदित्यर्थः ।

---

१. 'त्मकत्व' क. ग. पाठः. २. 'ति स्फु' ख. पाठः. ३. 'भिः कार्यस्य कर्तव्यस्य कटकादिभिः क्रियमाणत्वात् स्व' क. पाठः., 'भिः कार्यस्य कटकादिभिः क्रियमाणत्वात् स्व' ग. पाठः.

किञ्च, विद्यालाभे ब्रह्मज्ञाने सति अविद्यास्तमयात् स्फुटं विकसेदपि प्रपञ्चाकारपरित्यागेनाखण्डं ब्रह्मेति प्रकाशेत चेत्यर्थः। अत्र दृष्टान्तः—स्वप्नेति। स्वप्नद्रष्टुः प्रबोधे सति यद्वदज्ञानकल्पितप्रपञ्चलयः, यद्वच्च दीपादिना तिमिरलयविधौ जीर्णरज्जोर्ज्ञानेन तदज्ञानकल्पितसर्पलयः, तथैवेत्यर्थः। हे कृष्ण! यस्य ते वपुरुक्तप्रकारेण विकसेत्, तस्मै नमस्ते इति योजना ॥ ७ ॥

एवं सप्रपञ्चनिष्प्रपञ्चभेदेन तत्स्वरूपं स्तुत्वा सर्वनियन्तृत्वेन स्तौति—

**यद्भीत्योदेति सूर्यो दहति च दहनो वाति वायुस्तथान्ये**
**यद्भीताः पद्मजाद्याः पुनरुचितबलीनाहरन्तेऽनुकालम्।**
**येनैवारोपिताः प्राङ् निजपदमपि ते च्यावितारश्च पश्चात्**
**तस्मै विश्वं नियन्त्रे वयमपि भवते कृष्ण! कुर्मः प्रणामम् ॥ ८ ॥**

यद्भीत्येति। यस्माद् भीत्या सूर्य उदेति। उचितबलीन् यथाधिकारं विहिताः पूजा आहरन्ते प्रयच्छन्ति। ते पद्मजाद्याः येन प्राङ् निजपदं सत्यलोकादि आरोपिताः प्रापिताः पश्चाद् द्विपरार्धाद्यवसाने येन च्यावितारः च्युतिं प्रापिताश्च भविष्यन्ति, तस्मै विश्वं नियन्त्रे ब्रह्मादीनामपि नियामकाय सर्वेश्वराय वयमपि भवते हे कृष्ण! प्रणामं कुर्मः ॥ ८ ॥

किञ्च,

**त्रैलोक्यं भावयन्तं त्रिगुणमयमिदं त्र्यक्षरस्यैकवाच्यं**
**त्रीशानामैक्यरूपं त्रिभिरपि निगमैर्गीयमानस्वरूपम्।**
**तिस्रोऽवस्था विदन्तं त्रियुगजनिजुषं त्रिक्रमक्रान्तविश्वं**
**त्रैकाल्ये भेदहीनं त्रिभिरहमनिशं योगभेदैर्भजे त्वाम् ॥ ९ ॥**

त्रैलोक्यमिति। इदं त्रिगुणमयं सत्त्वरजस्तमस्तारतम्येन विलक्षणं त्रैलोक्यं भावयन्तं नियमेन सृजन्तं त्र्यक्षरस्य प्रणवस्य एकं प्रधानं वाच्यम् अभिधेयं त्रीशानां त्रिमूर्तीनाम् ऐक्यं स्वरूपं यस्य तम्। "ब्रह्मा विष्णुश्च रुद्रश्च परस्यैव विभूतयः" इति वचनात्। त्रिभिर्निगमैः त्रय्या गीयमानं प्रतिपाद्यमानं रूपं यस्य। तिस्रोऽवस्थाः जाग्रत्स्वप्नसुषुप्तयः, ता वेत्तीति विदन्, अवस्थात्रयसाक्षी तम्। कृतयुगे प्रजानां कृतकृत्यतयावतारप्रयोजनाभावादितरेषु त्रिषु त्रेताद्वापरकलियुगेषु जनिम् अवतारं जुषत इति तथा। त्रिभिः क्रमैः पदविक्षेपैः क्रान्तम् आक्रान्तं विश्वं येन। त्रैकाल्ये भूतभविष्यद्वर्तमानेषु

---

[illegible] क. प. पाठः.

कालेषु भेदहीनम् अद्वितीयं, जायतेऽस्तीत्यादिषड्भावविकारहीनं वा । एवम्भूतं त्वाम् अहमनिशं त्रिभिर्योगभेदैः कर्मज्ञानभक्तियोगैः भजे ॥ ९ ॥

किंच,

सत्यं शुद्धं विबुद्धं जयति तव वपुर्नित्यमुक्तं निरीहं
निर्द्वन्द्वं निर्विकारं निखिलगुणगणव्यञ्जनाधारभूतम् ।
निर्मूलं निर्मलं तन्निरवधिमहिमोल्लासि निर्लीनमन्त-
र्निस्सङ्गानां मुनीनां निरुपमपरमानन्दसान्द्रप्रकाशम् ॥ १० ॥

सत्यमिति । तव तद्वपुः स्वरूपं जयति आविर्भूतनिरतिशयोत्कर्षं प्रकाशते । सत्यादीनि वपुर्विशेषणानि । सत्यं परमार्थसत्यम् असतः सत्ताप्रदत्वात् । विबुद्धं स्वप्रकाशसिद्धम् मुक्तावस्थाया जन्यत्वेऽसत्यत्वप्रसक्ते[1] नित्यमुक्तम् । निरीहं कर्तृत्वभोक्तृत्वादिरहितम् । निर्द्वन्द्वम् अद्वितीयम् । निर्विकारं परिणामादिविक्रियारहितम् । निखिलानां ये गुणगणाः क्षमासत्यदयैश्वर्यादयः, तेषां व्यञ्जनम् उत्पत्तिः, तदाधारभूतम् । यदुपासने हि महागुणानामुत्पत्तिः । निर्मूलं निष्कारणम् । निर्मलं रागादिदोषहीनं, चित्प्रकाशत्वाद् निरस्ताज्ञानम् । निरवधिमहिमोल्लासि कालदशापरिच्छिन्नवैभवयुक्तम् । निस्सङ्गानां मुनीनामन्तः समाधौ निर्लीनं प्रतिष्ठितम् । निरुपमः परमानन्दः सान्द्रः प्रकाशः सान्द्रावबोधश्च यस्मिन् ॥ १० ॥

अथोक्तरूपं परं ब्रह्म प्राप्तानां न पुनः संसार इत्यभिप्रायेण कालचक्रपरिभ्रमभयनिवृत्तिं प्रार्थयते —

दुर्वारं द्वादशारं त्रिशतपरिमिलत्षष्टिपर्वाभिवीतं
संभ्राम्यत् क्रूरवेगं क्षणमनु जगदाच्छिद्य सन्धावमानम् ।
चक्रं ते कालरूपं व्यथयतु न तु मां त्वत्पदैकावलम्बं
विष्णो! कारुण्यसिन्धो! पवनपुरपते! पाहि सर्वामयौघात् ॥ ११ ॥

दुर्वारमिति । हे विष्णो! ते कालचक्रं संवत्सरात्मकं चक्रं न तु मां व्यथयतु संसारदुःखं मा कार्षीत् । कीदृशं, दुर्वारं केनाप्यनिवारणीयम् । संवत्सरस्य द्वादश मासाः, तदात्मकद्वादशशिखरयुक्तम् । त्रिशतपरिमिलत्षष्ट्या षष्ट्युत्तरशतत्रयेण दिनैः पर्वभिर्धारासन्धिभिः अभिवीतम् अभिव्याप्तम् ।

---

१. 'त्वेऽनित्य' क. ग. पाठः.

संभ्राम्यद् बंभ्रम्यमाणम् । क्रूरवेगं क्षणमनु प्रतिक्षणं जगदाच्छिद्य आदायाः दर्शनं नेतुं सन्धावमानम् ॥ ११ ॥

इति सत्यज्ञानादिस्वरूपाद् ब्रह्मणो जगदुत्पत्यादि-
निरूपणम् अष्टनवतितमं दशकं सैकम् ॥

---

अथ नवभिः श्लोकैर्भगवन्महिमा वर्ण्यते —

विष्णोर्वीर्याणि को वा कथयतु धरणेः कश्च रेणून् मिमीते
यस्यैवाङ्घ्रित्रयेण त्रिजगदभिमितं मोदते पूर्णसम्पत् ।
योऽसौ विश्वानि धत्ते प्रियमिह परमं धाम तस्याभियायां
तद्भक्ता यत्र माद्यन्त्यमृतरसमरन्दस्य यत्र प्रवाहः ॥ १ ॥

विष्णोरिति । वीर्याणि महिम्नः को वा कथयतु गणयेद्, न कोऽपि । कश्च धरणेः रेणून् मिमीते । तदपि न कोऽपि । यस्य विष्णोः अङ्घ्रित्रयेण त्रिभिः पदन्यासैः त्रिजगत् त्रैलोक्यम् अभिमितं परिच्छिन्नम् । अतो बलेरादाय स्वभुजगुप्ततया पूर्णसम्पद् मोदते सन्तुष्टसकलजनं च वर्तते । किञ्च, योऽसौ विष्णुः विश्वानि सर्वलोकं धत्ते योगैश्वर्येण धारयति, तस्य प्रियं धाम वैकुण्ठम् अभियायाम् अहं प्राप्नुयां, यत्र तद्भक्ता माद्यन्ति । अमृतरसो मोक्षसुखं, तद्रूपस्य मरन्दस्य मधुनो यत्र वैकुण्ठे प्रवाहः सर्वतो निष्यन्दः ॥ १ ॥

आद्यायाशेषकर्त्रे प्रतिनिमिषनवीनाय भर्त्रे विभूते-
र्भक्तात्मा विष्णवे यः प्रदिशति हविरादीनि यज्ञार्चनादौ ।
कृष्णाद्यं जन्म यो वा महदिह महतो वर्णयेत् सोऽयमेव
प्रीतः पूर्णो यशोभिस्त्वरितमभिसरेत् प्राप्यमन्ते पदं तत् ॥ २ ॥

आद्यायेति । आदौ भवाय अत एव अशेषकर्त्रे सर्वकारणाय प्रतिनिमिषनवीनाय उपासकानां नित्यनूतनाय विभूतेः श्रियः भर्त्रे । प्रेमलक्षणभक्तियुक्त आत्मा मनो यस्य सः । यस्तथाभूतः उक्तरूपाय विष्णवे यज्ञार्चनादौ हविरादीनि प्रदिशति, यो वा महतो विष्णोः महत् पूजनीयं कृष्णाद्यं जन्म अवतारं वर्णयेत्, सोऽयं भक्त एवेह यथेष्टसुखानुभवेन प्रीतः यशोभिः पूर्णः अन्ते शरीरपाते त्वरितं जन्मान्तरविलम्बमन्तरेण तत् पदं वैकुण्ठलोकम् अभिसरेत् प्राप्नुयाद्, नान्यः ॥ २ ॥

यत एवम्, अतस्तमेव स्तुवीध्वमित्याह —

**हे स्तोतारः! कवीन्द्रास्तमिह खलु यथा चेतयध्वे तथैव**
**व्यक्तं वेदस्य सारं प्रणुवत जननोपात्तलीलाकथाभिः ।**
**जानन्तश्चास्य नामान्यखिलसुखकराणीति सङ्कीर्तयध्वं**
**हे विष्णो! कीर्तनाद्यैस्तव खलु महतस्तत्त्वबोधं भजेयम् ॥ ३ ॥**

हे स्तोतार इति । इह ये कवीन्द्राः काव्यकुशलाः अत एव स्तोतारो राजादिवर्णनपराः, ते खलु यूयं यथा चेतयध्वे अवगच्छथ, तथैव जननैरवतारैः उपात्ताभिरङ्गीकृताभिः लीलाभिः तं विष्णुं प्रणुवत स्तुतिं कुरुत । व्यक्तं प्रमाणसिद्धं वेदस्य सारं प्रधानप्रतिपाद्यम् । हे जानन्तः! परमार्थज्ञाः! अस्य विष्णोर्नामान्यखिलसुखकराणि मोक्षप्रदानीत्यतः सङ्कीर्तयध्वम् । हे विष्णो! महतस्तव कीर्तनाद्यैः खलु तत्त्वबोधं तत्त्वज्ञानं भजेयम् ॥ ३ ॥

किञ्च,

**विष्णोः कर्माणि सम्पश्यत मनसि सदा यैः स धर्मानबध्नाद्**
**यानीन्द्रस्यैष भृत्यः प्रियसख इव च व्यातनोत् क्षेमकारी ।**
**वीक्षन्ते योगसिद्धाः परपदमनिशं यस्य सम्यक्प्रकाशं**
**विप्रेन्द्रा जागरूकाः कृतबहुनुतयो यच्च निर्भासयन्ते ॥ ४ ॥**

विष्णोरिति[1] । यूयं विष्णोः कर्माणि चरितानि मनसि सदा संपश्यत चिन्तयत । स विष्णुः यैः दुष्टनिग्रहविद्यास्थापनलोकसंग्रहणरूपैः कर्मभिः धर्मान् अभ्युदयनिःश्रेयसार्थान् अबध्नात् तत्तदधिकारिभिः संयोजयामास, तानि कर्माणि संपश्यतेत्यर्थः । एष विष्णुरिन्द्रस्य त्रैलोक्यरक्षायामात्मनाधिकृतस्य भृत्य इव, इन्द्रकर्तृकस्य जगद्रक्षणस्य तदशक्तेः स्वयं करणात् । अत एव महतोपकारेणास्य प्रियसख इव च भगवान् यानि कर्माणि व्यातनोत् चकार । क्षेमकारी एवं जगद्रक्षणशील इत्यर्थः । किञ्च, योगसिद्धाः समाधिनिर्जितसमग्रैश्वर्यादिगुणा मुनयो यस्य परपदं मायासम्बन्धरहितं प्रासिद्धस्थानमनिशं वीक्षन्ते पश्यन्ति । सम्यक् प्रकाशं यस्मात् सर्वस्येति परपदं विशेष्यते । यत् परपदं विप्रेन्द्रा जागरूकास्तात्पर्यवन्तः कृतबहुनुतयः सगुणनिर्गुणभेदेन स्तुतिं कुर्वन्तो निर्भासयन्ते प्रकाशयन्ति ॥ ४ ॥

---

1. 'णि म' ख. पाठः.

**नो जातो जायमानोऽपि च समधिगतस्त्वन्महिम्नोऽवसानं**
**देव! श्रेयांसि विद्वान् प्रतिमुहुरपि ते नाम शंसामि विष्णो!।**
**तं त्वां संस्तौमि नानाविधनुतिवचनैरस्य लोकत्रयस्या-**
**प्यूर्ध्वं विभ्राजमाने विरचितवसतिं तत्र वैकुण्ठलोके॥ ५॥**

नो जात इति। हे देव! जातो जायमानश्च यः पुरुषः, स कोऽपि त्वन्महिम्नोऽवसानं नाधिगतः न प्राप्तः। अतोऽहं श्रेयांसि विद्वान् इदमेव श्रेय इति निश्चित्य प्रतिमुहुः अनिशं ते नाम शंसामि सङ्कीर्तयामि। हे विष्णो! तमपरिच्छिन्नमाहिमानं त्वां नानाविधस्तुतिवचनैः संस्तौमि। निर्गुणे मनोऽनवगाहात् सगुणं त्वां स्तौमीत्यर्थः। अस्य लोकत्रयस्य ब्रह्माण्डस्योर्ध्वं विभ्राजमाने तत्र वैकुण्ठलोके विरचिता वसतिर्वासो यस्य॥ ५॥

अथ श्रीनारायणरूपं स्तौति—

**आपः सृष्ट्यादिजन्याः प्रथममयि विभो! गर्भदेशे दधुस्त्वां**
**यत्र त्वय्येव जीवा जलशयन! हरे! सङ्गता ऐक्यमापन्।**
**तस्याजस्य प्रभो! ते विनिहितमभवत् पद्ममेकं हि नाभौ**
**दिक्पत्रं यत् किलाहुः कनकधरणिभृत्कर्णिकं लोकरूपम्॥ ६॥**

आप इति। सृष्ट्यादिजन्याः 'अप एव ससर्जादौ' (मनु० १. ९) इति वचनाद् आपः प्रथममादौ त्वां गर्भदेशे दधुः। यत्र अपां मध्येऽवस्थिते त्वय्येव जीवाः सङ्गताः प्राप्ताः ऐक्यमापन् अनुशयिता अभवन्। कल्पान्ते सर्वजीवा ब्रह्मणा सह जलशायिनि श्रीनारायणे सङ्गता अनुशेरते। तस्य जलशयनस्य अजस्य विष्णोस्ते नाभौ विनिहितमाधिष्ठितमेकं पद्ममभवत्। यत् पद्मं लोकरूपमाहुः। तदेवाह—दिशः पत्राणि दलानि यस्य, कनकधरणिभृद् महामेरुः कर्णिका यस्य तत्। श्रीविष्णुरेव कमलजः सन् नाभिकमलेन भुवनमजनयदित्यर्थः॥ ६॥

उक्तरूपं विष्णुमजानतः शोचन्नाह—

**हे लोका विष्णुरेतद् भुवनमजनयत् तन्न जानीथ यूयं**
**युष्माकं ह्यन्तरस्थं किमपि तदपरं विद्यते विष्णुरूपम्।**
**नीहारप्रख्यमायापरिवृतमनसो मोहिता नामरूपैः**
**प्राणप्रीत्यैकतृप्ताश्चरथ मखपरा हन्त नेच्छा मुकुन्दे॥ ७॥**

न्यद् न किञ्चिदपि । अपिच, ते स्तोको भागः पादकल्प एवाखिलभुवनतया ब्रह्माण्डरूपेण दृश्यते । त्र्यंशकल्पं प्रायेण त्र्यंशव्यवहारयोग्यं भूयिष्ठम् अधिकतरं ते रूपं सान्द्रमोदात्मकं परमानन्दरूपं ततो ब्रह्माण्डाद् उपरि बहिर्देशे भाति । तस्मै अपरिच्छिन्नात्मने ॥ ९ ॥

एवं 'यस्मिन्' (द० ९८, श्लो० १) इत्यारभ्य विंशत्या श्लोकैः सगुणनिर्गुणभेदेन भगवन्तं स्तुतिमिषेणानुसन्दधानः स्वस्य तत्रानधिकारमाशङ्कमानोऽभीष्टायां मूर्तौ चित्तमवतारयितुमारभते —

**अव्यक्तं ते स्वरूपं दुरधिगमतमं तत् तु शुद्धैकसत्त्वं**
**व्यक्तं चाप्येतदेव स्फुटममृतरसाम्भोधिकल्लोलतुल्यम् ।**
**सर्वोत्कृष्टामभीष्टां तदिह गुणरसेनैव चित्तं हरन्तीं**
**मूर्तिं ते संश्रयेऽहं पवनपुरपते! पाहि मां कृष्ण! रोगात् ॥ १० ॥**

अव्यक्तमिति । ते अव्यक्तं केनापि न व्यज्यते इत्यव्यक्तं ब्रह्मस्वरूपं दुरधिगमतमम् अतिशयेन दुरधिगमं दुःखेन ज्ञातुं प्राप्तुं वा शक्यं, "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" (भ० गी० १२. ५) इति भगवद्वचनात् । तत् शुद्धैकसत्त्वं शुद्धसत्त्वात्मकं तु ते स्वरूपं व्यक्तं ज्ञातुं शक्यम् । अपिच एतदेव श्रीकृष्णादिरूपम् अमृतरसाम्भोधिकल्लोलतुल्यं ब्रह्मानन्दामृतरसाम्भोधेः कल्लोलेन तुल्यं सुखसेव्यम् । यस्मादेवं तत् तस्मात् सर्वोत्कृष्टामभीष्टाम् इह भगवति ये गुणा भक्तवात्सल्यादयः त एव रसाः आस्वादनीयत्वात्, तेनैव चित्तं हरन्तीं मनोहरां ते मूर्तिमहं संश्रये स्तोतुं ध्यातुं वा समारभे । हे पवनपुरपते! श्रीकृष्ण! मां रोगात् संसारलक्षणात् पाहि ॥ १० ॥

इति भगवन्महिमानुवर्णनमेकोनशततमं दशकम् ॥

---

एवं भगवदवतारचरितस्मरणकीर्तनादिभिरुपबृंहितप्रेमलक्षणभक्तिपरिपाकवशेन हृदयाकाशमवतीर्णं स्फुटप्रतीयमानावयववेषविशेषादिकं भगवद्रूपं पुर इवावलोकयन् [illegible] स्तौति —

**अग्रे पश्यामि तेजो निबिडतरकलायावलीलोभनीयं**
**पीयूषाप्लावितोऽहं तदनु तदुदरे दिव्यकैशोरवेषम् ।**

---

१. [illegible] पाठः

तारुण्यारम्भरम्यं परमसुखरसास्वादरोमाञ्चिताङ्गै-
रावीतं नारदाद्यैर्विलसदुपनिषत्सुन्दरीमण्डलैश्च ॥ १ ॥

अग्र इति । तेजः प्रभामण्डलम् । तदनु तद्दर्शनानन्तरं दिव्यः सात्त्विकः प्रकाशोज्ज्वलः आ षोडशाब्दात् कैशोरः, तत्सम्बन्धी वेषो यस्मिन् । तारुण्यारम्भरम्यं षोडशवर्षीयं किमपि रूपं च पश्यामि । आवीतं परिवारितम् । उपनिषत्सुन्दरीमण्डलैरित्यनेनेदमवगम्यते — परं ब्रह्म श्रीकृष्णः, गोप्यस्तत्प्रतिपादकोपनिषदः, श्रीनारदादयस्तदुपदेष्टारः, द्रष्टाधिकारी ॥ १ ॥

दिव्यकैशोरवेषमिति यदुक्तं, तदेवाह —

नीलाभं कुञ्चिताग्रं घनममलतरं संयतं चारुभङ्ग्या
रत्नोत्तंसाभिरामं वलयितमुदयच्चन्द्रकैः पिञ्छजालैः ।
मन्दारस्रङ्निवीतं तव पृथुकबरीभारमालोकयेऽहं
स्निग्धश्वेतोर्ध्वपुण्ड्रामपि च सुललितां फालबालेन्दुवीथीम् ॥ २ ॥

नीलाभमिति । घनं निबिडम् । उदयच्चन्द्रकैः प्रकाशमानाग्रदेशस्थचित्रवर्णैः । मन्दारस्रजा सुरकुसुमविरचिताम्लानमालया निवीतं वेष्टितम् ॥ २ ॥

यथानुभूतं नेत्राम्बुजद्वन्द्वं स्तौति —

हृद्यं पूर्णानुकम्पार्णवमृदुलहरीचञ्चलभ्रूविलासै-
रानीलस्निग्धपक्ष्मावलिपरिलसितं नेत्रयुग्मं विभो! ते ।
सान्द्रच्छायं विशालारुणकमलदलाकारमामुग्धतारं
कारुण्यालोकलीलाशिशिरितभुवनं क्षिप्यतां मय्यनाथे ॥ ३ ॥

हृद्यमिति । अनाथे अशरणे ॥ ३ ॥

उत्तुङ्गोल्लासिनासं हरिमणिमुकुरप्रोल्लसद्गण्डपाली-
व्यालोलत्कर्णपाशाञ्चितमकरमणीकुण्डलद्वन्द्वदीप्रम् ।
उन्मीलद्दन्तपङ्क्तिस्फुरदरुणतरच्छायबिम्बाधरान्तः-
प्रीतिप्रस्यन्दिमन्दस्मितशिशिरतरं वक्त्रमुद्भासतां मे ॥ ४ ॥

---

१. 'तमधुर' ग. पाठः.

उत्तुङ्गेति । हरिमणिमुकुरवद् इन्द्रनीलमणिमयदर्पणवत् प्रोल्लसन्त्यां गण्डपाल्यां कपोलदेशे व्यालोलता बिम्बप्रतिबिम्बद्वैरूप्येण दोलायमानेन मकराकारयोर्मणिकुण्डलयोर्द्वन्द्वेन दीप्रं दीपनशीलम् ॥ ४ ॥

बाहुद्वन्द्वेन रत्नोज्ज्वलवलयभृता शोणपाणिप्रवाले-
नोपात्तां वेणुनालीं प्रसृतनखमयूखाङ्गुलीसङ्गशाराम् ।
कृत्वा वक्त्रारविन्दे सुमधुरविकसद्रागमुद्भाव्यमानैः
शब्दब्रह्मामृतैस्त्वं शिशिरितभुवनैः सिञ्च मे कर्णवीथीम् ॥ ५ ॥

बाहुद्वन्द्वेनेति । प्रसृतनखमयूखाङ्गुलीसङ्गशारां प्रसृतनखमयूखानाम् अङ्गुलीनां सङ्गेन शारां शबलवर्णाम् । सुमधुरो विकसन् प्रकाशमानो रागो गीतविशेषो यस्मिन्निति क्रियाविशेषणम् । उद्भाव्यमानैः प्रकाश्यमानैः शब्दब्रह्मामृतैः नादामृतैः ॥ ५ ॥

उत्सर्पत्कौस्तुभश्रीततिभिररुणितं कोमलं कण्ठदेशं
वक्षः श्रीवत्सरम्यं तरलतरसमुद्दीप्रहारप्रतानम् ।
नानावर्णप्रसूनावलिकिसलयिनीं वन्यमालां विलोल-
ल्लोलम्बां लम्बमानामुरसि तव तथा भावये रत्नमालाम् ॥६॥

उत्सर्पदिति । हारप्रतानं मौक्तिकमालाजालम् । विलोलल्लोलम्बामुरसि तथा रत्नमालां च भावये ॥ ६ ॥

अङ्गे पञ्चाङ्गरागैरतिशयविकसत्सौरभाकृष्टलोकं
लीनानेकत्रिलोकीविततिमपि कृशां बिभ्रतं मध्यवल्लीम् ।
शक्राश्मन्यस्ततप्तोज्ज्वलकनकनिभं पीतचेलं दधानं
ध्यायामो दीप्तरश्मिस्फुटमणिरशनाकिङ्किणीमण्डितं त्वाम् ॥ ७ ॥

अङ्ग इति । पञ्चाङ्गरागैः हरिचन्दनगोरोचनादिभिः अतिशयेन विकसता व्याप्तेन सौरभेणाकृष्टा लोका येन स तथा । लीनानेकत्रिलोकीम् अन्तर्गतानेकब्रह्माण्डामपि कृशामिति । अयमर्थः — यद्यपीदमपि ब्रह्माण्डं श्रीकृष्णोदरस्थं, तथापि एतद्ब्रह्माण्डान्तस्थानां तदानीन्तनानां स्वमूर्तेरिदन्तया प्रद-

शैनं भगवतो योगैश्वर्यवैभवेन । एवञ्च मध्यवल्ल्याः कृशत्वापादनं नास्य किञ्चिद् भार इति । शक्रारमेति । भगवन्मूर्तेरिन्द्रनीलश्यामत्वात् पीताम्बरस्य कनकनिभत्वाच्च सञ्जातपरभागमिति भावः । दीप्ताभिः रश्मिभिः मणिदीप्तिभिः स्फुटया प्रकाशमानया ॥ ७ ॥

ऊरू चारू तवोरू घनमसृणरुचौ चित्तचोरौ रमाया
विश्वक्षोभं विशङ्क्य ध्रुवमनिशमुभौ पीतचेलावृताङ्गौ ।
आनम्राणां पुरस्तान्न्यसनधृतसमस्तार्थपालीसमुद्ग-
च्छायं जानुद्वयं च क्रमपृथुलमनोज्ञे च जङ्घे निषेवे ॥ ८ ॥

ऊरू इति । विश्वक्षोभं लोकोत्तररामणीयकत्वेन द्रष्टृजनपारवश्यं विशङ्क्य । समस्तार्थपालीनां सकलपुरुषार्थसार्थानां यः समुद्गः सम्पुटकः, तस्यच्छाया शोभेव शोभा यस्य ॥ ८ ॥

मञ्जीरं मञ्जुनादैरिव पदभजनं श्रेय इत्यालपन्तं
पादाग्रं भ्रान्तिमज्जत्प्रणतजनमनोमन्दरोद्धारकूर्मम् ।
उत्तुङ्गाताम्रराजन्नखरहिमकरज्योत्स्नया चाश्रितानां
सन्तापध्वान्तहन्त्रीं ततिमनुकलये मङ्गलामङ्गुलीनाम् ॥ ९ ॥

मञ्जीरमिति । भ्रान्तिरूपेऽब्धौ मज्जतां प्रणतजनानाममृतार्थिनां मनोरूपस्य मन्दरस्य उद्धारे कूर्मम् । सन्तापस्य ध्वान्तस्य अज्ञानस्य च हन्त्रीम् ॥ ९ ॥

योगीन्द्राणां त्वदङ्गेष्वधिकसुमधुरं मुक्तिभाजां निवासो
भक्तानां कामवर्षद्युतरुकिसलयं नाथ! ते पादमूलम् ।
नित्यं चित्तस्थितं मे पवनपुरपते! कृष्ण! कारुण्यसिन्धो!
हृत्वा निश्शेषतापान् प्रदिशतु परमानन्दसन्दोहलक्ष्मीम् ॥ १० ॥

योगीन्द्राणामिति । योगीन्द्राणां ध्यातॄणां त्वदङ्गेषु मध्येऽधिकसुमधुरम् । मुक्तिभाजां तु निवास आश्रयः । परमानन्दसन्दोहलक्ष्मीं मोक्षम् ॥ १० ॥

---

१. 'शैन । ए', २. 'स्यातिभा' क. ग. पाठः.

एवं स्तुतिमुपसंहृत्य तत्र वैगुण्यादिसम्भवमाशङ्क्य स्तोत्रस्य साद्गुण्यकरणायेश्वरे समर्पयन् वक्तृश्रोतॄणां पठनश्रवणफलमाशास्ते —

अज्ञात्वा ते महत्त्वं यदिह निगदितं विश्वनाथ! क्षमेथाः
स्तोत्रं चैतत् सहस्रोत्तरमधिकतरं त्वत्प्रसादाय भूयात् ।
द्वेधा नारायणीयं श्रुतिषु च जनुषा स्तुत्यतावर्णनेन
स्फीतं लीलावतारैरिदमिह कुरुतामायुरारोग्यसौख्यम् ॥ ११ ॥

अज्ञात्वेति । द्वेधा नारायणीयं नारायणमधिकृत्य कृतत्वात् नारायणेन प्रोक्तत्वाच्च । ननु विहितमविहितं वेदं स्तोत्रं त्वत्प्रसादाय भूयादिति समर्प्यत इति चेत्, श्रुतिविहितमेवेत्याह — श्रुतिष्विति । जनुषा अवतारैर्भगवतः स्तुत्यतया वर्णनं [illegible] विद्यते, तेन स्फीतं व्याप्तम्, अथवा श्रुतिषु च जनुषा [illegible], [illegible] 'हे स्तोतारः' ([illegible]) [illegible] वर्णनेन लीलावतारैश्च स्फीतम् इदं स्तोत्रम् इह [illegible] [illegible] चान्ते सौख्यं मोक्षं च कुरुताम् ॥ ११ ॥ ३८ ॥

इति [illegible] ॥

श्रीभागवततद्व्याख्यादृष्टानर्थान् पदान्यपि ।
स्तोत्रव्याख्यानरूपेण रचितानि परं मया ॥

[illegible] ।
ताभ्यामेव हृदिस्थाभ्यां मया [illegible] कृतिः ॥

इति नारायणीयस्तोत्रव्याख्यायां भक्तप्रियाख्यायां
द्वादशस्कन्धपरिच्छेदः ॥

---

[illegible] ७०३६.

समाप्तश्चायं ग्रन्थः

शुभं भूयात्

---

[illegible] 'अ कृतम्, अ' क, ग. पाठः.

## LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

### Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकं **[illegible]** (Nāṭaka) by [illegible] (*out of stock*). | 1 | 8 | 0 |
| No. 21—[illegible] **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 0 | [illegible] |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—[illegible] **Tantrasuddha** by Bhaṭṭāraka Vedottama. (*out of stock*). | 0 | 4 | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhinyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhâravî with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidâsa with the commentary Pradīpa of Dakṣiṇâvartanâtha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantraasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Sankara (Part I, 1–6 Paṭalâs) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikâ of Śrī Kumâra. | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśiva gurudevamiśra Part I, Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्प **Aryamanjusrimulakalpa** (Part I). | [illegible] | [illegible] | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyana with the commentary Vimarśinī of Sankara (Part II, 7—12 Patalas) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II. Mantrapāda). | 4 | 0 | 0 |
| No. 73—**ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—**शिल्परत्नम् Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—**आश्वलायनगृह्यसूत्रम् Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—**अर्थशास्त्रम् Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31–64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûḍâmaṇi of Bhaṭṭagopâla (Part I, 1-5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśikā of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—[illegible] **Rksamhita** with the Bh[illegible] [illegible] and the [illegible] [illegible] (Part I, 1st [illegible] in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P |
|---|---|---|---|
| o. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrī-kumāra. (Part II.) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddhaśrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva.** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—काव्यरत्नम् **Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—बालमार्ताण्डविजयम् **Balamartandavijaya.** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109—न्यायसारः **Nyayasara** with the | | | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 110—आर्यभटीयम् **Aryabhatīya** (Jyotiṣā) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan.(Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111- हृदयप्रियः **Hridayapriya** (Vaidyaka) by Paramesvara, | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । **Kucelopakhyana and Ajamilopakhyana.** (Sangīta) by H. H. Svāti Śrī Rāma Varma Maharaja. | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः **Sangitakrtis** (Gāna) of H. H. Svati Srī Rama Varma Māharaja. | 1 | 0 | 0 |

***Apply to:—***

*The Curator*

*for the publication of Oriental Manuscripts,*

*Trivandrum.*